# जगद्वचनवाहिनी

कन्नडभाषागोचरस्य वचनवाङ्मयस्य शैलीमनुकृत्य
अष्टोत्तरशतसङ्ख्याकैर्गद्यवचनैः
मैसूरवीयेन एस्.जगन्नाथेन प्रवाहिता।

sanskritebooks इत्यभिधानेऽन्तर्जालस्थाने
शङ्करेण प्रकाशिता।



jgrantha@gmail.com

अक्टोबर् २०१८

## इदमत्र वक्तव्यम्-

ममेयं नवीना कृतिः- वचनवाङ्मयमिति कन्नडभाषायां प्रसिद्धस्य वाङ्मयस्य क्वाचित्केनाकृत्यनुकरणेन सृष्टानां वाक्यानां संकलनम्। प्रतिवचनं वचनकाराणां वास्तविकमभिधानमाहोस्वित् स्वयं सृष्टं नाम वा योज्यते। मयाऽपि तदनुकृत्या 'जगत्' इति नाम योजितम्।

वचनमिति शब्द उक्तिरित्यर्थं वक्तीति सुप्रथितम्। सर्वज्ञेन रचितानि सुभाषितप्रायाणि कन्नडवचनानि पद्यमयानि। वीरशैववचनवाङ्मयं तु गद्यमयं यत्र-आध्यात्मिका विचाराः, आराध्ये भगवति शिवे भक्त्यतिशयस्य महत्त्वं, लौकिकेषु विषयेष्वासक्तिनिषेधः, अन्धपरम्परायाः खण्डनं चेत्येतदादिकं प्रतिपाद्यं वस्तु।

यद्यपि वचनमिति शब्दस्यैव गद्यमिति नार्थस्तथापि वीरशैववचनानां सर्वेषामपि गद्ये रचितत्वात् कालक्रमेण वचनमिति शब्दस्य गद्येन कथनमित्यर्थः कन्नडे रूढोऽभवत्। यथा ए.आर्.कृष्णशास्त्रिणा विरचितं कन्नडगद्यभारतं ''वचनभारतम्'' इत्यभिधानयुक्।

मातृकासु लिखितेषु वचनेषु वाक्यानां समाप्तौ दण्डचिह्नस्य सत्त्वेऽपि वाक्यभेदानुसारेण पङ्क्तिभेदो न गोचरीभवति। दण्डचिह्नस्य मूलरचयितृभिरेव स्थापितत्वेऽपि तत्र केचन व्यत्यया लिपिकरैरपि सृष्टा इव। पूर्वं मुद्रितेष्वपि वचनवाङ्मयेषु पङ्क्तिभेदो नासीत्। मातृकासु स्थापितानां वचनवाङ्मयगतानां दण्डस्थलानामाधारेण नवीनाः संपादकाः वचनानां मुद्रणायाः समये पङ्क्तिभेद मकुर्वन्।

एतं पङ्क्तिभेदमनुसृत्य संगीतार्हेषु तालवास्तुषु कर्षणविकर्षणाभ्यां वचनान्युपवेशय्य सविविधरागं गायनं त्वाधुनिकी प्रवृत्तिरित्यन्यदेतत्।

मम मित्रमणिः श्रीमान् शङ्करो यथापूर्वं ममैतामपि रचनां प्रकाशयति। तस्मै भूरिशो वन्दनानि समर्पये।

अक्टोबर् २०१८

एस्.जगन्नाथः

# जगद्वचनवाहिनी

एस्.जगन्नाथः

**क्रियाद् व्यवहृतीरलं सदसतोस्सुयोग्या अनु-**
**स्त्रियाच्च मतिमाञ्जनः स्वहृदयोपदेशध्वनिम्।**
**ह्रियाद् विकृतचिन्तनं कलुषवृन्दसंक्षालिनी**
**जगद्वचनवाहिनी सपरुषोक्तिवीच्युत्कटा॥**

१.मल्लो जनः को हस्तबाहुविनाकृतः ?
बुद्धिमान् जनः को मस्तिष्कविनाकृतः ?
आर्यो जनः कः स्थानेकोपविनाकृतः ?
विद्वान् जनः कः स्वाभिमानविनाकृतः ?
राजधर्मवान् जनः को जिह्वानियन्त्रणाविनाकृतः ? ,जगत्!

२.मा जपानि मन्त्रं 'पूर्वस्मिन् काले सर्वे लोकोद्धारका आसन्'इति
मा जपानि मन्त्रम् 'आधुनिकाः सर्वे परापकारात् पापिष्ठा'इति।
मा जपानि मन्त्रं 'विश्वविद्यानिलये प्राप्तपदवीकाः सर्वे विद्यावन्त'
इति।
मा जपानि मन्त्रं 'सर्वेषां गानं कर्णरसायनम् ' इति।
मा जपानि मन्त्रं 'अधिभारतं ग्रन्थान् रचयितारो विदेशीयाः
सर्वेऽपि सत्यहरिश्चन्द्रस्यैव वंशे जाता ' इति ,जगत्!

३. अपश्यं तन्त्रशास्त्रोक्तसाधननिरतान् जनान्।
अपश्यं तन्त्रशास्त्रग्रन्थपाठकान् जनान्।
अपश्यं रचिततन्त्रशास्त्रग्रन्थान् जनान्।

अपश्यं कृततन्त्रशास्त्रविषयकसंशोधनग्रन्थान् जनान्।
नापश्यं संप्राप्ततन्त्रशास्त्रोक्तसिद्धीन् जनान् ,जगत्!

४. कर्णकुहरे निपतन्त्यसभ्यानि लपितानि विद्यया भूषितानामपि।
कर्णाभ्यामास्वाद्यन्ते रसायनायमानानि भाषितान्यशिक्षितानामपि।
कुत्सितं विलोठयन्ति स्वजिह्वां शास्त्रनिष्ठा अपि।
मधुरोक्तीर्निःसारयन्ति स्वमुखाद् विद्यागन्धविधुरा अपि।
अधिसमाजम् - कस्यापि लक्षणस्य निर्मितिरसम्भवा ,जगत्!

५. वृक्षकपिक्रीडामक्रीडाम, यदाऽऽस्म बाला वयम्।
अन्याः क्रीडाः क्रीडन्ति बाला ये सांप्रतिकाः।
स्मृतबाल्यकालिकघटना यापितामूल्यसमया वयम्।
दर्शितनवीननिर्मितिकौशल्या आधुनिका बालाः।
वयं वयम्।ते च ते ,जगत्!

६. सरलम्-अज्ञानां पुरस्तात् सुज्ञत्वख्यापनम्।
कष्टा-संशोधनग्रन्थरचनरूपेणाध्ययनेन बोधावाप्तिः।
सरलम्-मणिभूषणधारणम्।
कष्टं-समुद्रे मणीनामन्वेषणम्।
सरलं-पुष्पाणि तरूणां भूषणानीति दृष्टिः।
कष्टा च पत्राणि तरूणां भूषणानीति दृष्टिः,जगत्!

७. सर्वत्रापि 'एनर्जी-फ़्लो'-योगिनाम् आरभटी।
सर्वत्र 'इङ्ग्लीष्-योगि'नां डिण्डिमः।
सर्वत्र 'पतञ्जलिशब्दद्राक्षणयोगि'नां भेरी।
क्वास्ति पातञ्जलसूत्रानुशासिते पथि योगिनां चलनं,जगत्!?

८. अ-चित्रकलाज्ञानाश्चित्रकलाम् अन्येभ्यः शिक्षयितुं नार्हाः।
अ-संगीतकलाज्ञानाः संगीतकलाम् अन्येभ्यः शिक्षयितुं नार्हाः।
कर्णभूषणीक्रियतामधुना केषाञ्चित् प्राचार्याणां वाक्यमुक्तामणिः-
''मातृकास्थग्रन्थपाठसंपादनानुभवहीना एव
ग्रन्थसंपादनशास्त्रम् अन्येभ्यः शिक्षयितुम् अर्हाः'',जगत्!

९. किं नास्त्येष शुण्डादण्डोत्पाटितमहाविटपी ?
किं नास्त्येष खड्गिद्वन्द्वधृतकण्ठहारः ?
किं नास्त्येष कायघर्षणभग्नतरुत्वचाकः ? किन्तु हा हन्त, हन्त,
वेतण्डवरिष्ठोऽपि सन् अ-स्वाभिमान एष गजः
स्वोत्तमाङ्गे भषकमारोहयमाणस्तस्यादेशानां विधेयोऽस्ति,जगत्!

१०. संशयालु मनो 'देवानां प्रीतिः पुष्पार्पकेषु पूर्णप्रसादा' इत्यत्र।
संदेहनिबिडं मानसं 'देवानां रीतिः पत्रार्पकेषु समग्रानुग्रहा' इत्यत्र।
दृश्यते देवानां सन्तोषभूमा मकरन्दं चूषत्सु मिलिन्देषु।
ईक्ष्यते देवानां प्रमोदातिशयः पत्रैरुदरं भरत्सु प्राणिषु।
न जायते देवानामाह्लादो द्विरेफेषु दूनेषु सत्सु,जगत्!

११. 'राम एतादृगासीत्, तादृशा च तेन भाव्यमासीत्,
कृष्णस्तादृगवर्तत, एतादृशा च तेन वर्तितव्यमासीत्'इत्येवं
रामकृष्णयोश्चरित्रचित्रपटे कृष्णमशीं केचिज्जनाः अन्वेषन्ते।
साहसिकास्तु रामायणभारते नवीने निर्माय
रावणेन रामं, कंसेन च कृष्णं घातयन्ति,जगत्!

१२.धनुर्वेदनिष्ठितत्वेन श्लाघितो रामो रिपूणां बाणैराहतः,
अतिरथत्वेन श्लाघितः पार्थोऽपि शत्रूणामिषुभिर्व्रणितः।

यस्मिन् विषये श्लाघ्यन्ते जनास्ते कदाचित्
तस्मिन्नेव विषये श्लाघनस्तराद् गलन्ति,जगत्!

१३. सप्रयोजनकर्मलेशेनापि हीनाः केचन-
अन्येषां छिद्राण्यन्वेषमाणाः कालं यापयन्ति,
तत्रानुभूतवैरस्याः शवनिर्गच्छत्पूतिगन्धं श्लाघन्ते ,
तत्राप्यनवहितमनस्कास्तु, गुणदोषौ विश्लिष्य विमृशतो जनान् दृष्ट्वा
''न केवलं दोषा एव निन्द्या, गुणा अपि निन्द्या एव'' इति
गुर्गुरायन्ते,जगत्!

१४. सुगन्धप्रसारकेभ्यो भ्रमरप्रियेभ्यः
सौन्दर्योपमानेभ्यः
पादपाभरणायितेभ्यश्च सुमनोभ्यः
मूलानि किमसूयन्ति यानि-
सर्वदा जलान्वेषणव्यग्राणि ,जगत्!

१५. सर्वेऽपि षट्पदाः सबुद्धयः
चिन्तनबलिष्ठाः कार्याकार्यकुशलाश्च, ये
जानन्त्येव कतमं पुष्पमुपसर्तव्यं कतमं नेति च।
ये तेभ्य उपदिदिक्षन्ति 'अमुष्मादेव पुष्पान्मकरन्दश्चूषितव्य' इति,
प्रायस्ते अनिर्घ्रातपरिमला अस्पृष्टपरागा अदृष्टपुष्पाश्च ,जगत्!

१६. तव जिह्वाऽस्तीति सत्यमङ्गीकुर्मः।
तामुपयोक्तुं तवोत्कटमभिलषितमस्तीत्यपि संमन्यामहे।
परन्तु तव द्वौ कर्णौ स्त इति बोधोऽस्ति ते किम्?
जिह्वा लोला, कर्णौ स्थिराविति प्रायो न जानासि।
तस्मादेव सर्वज्ञाचार्यपीठे रिराजिषसे ,जगत्!

१७. हे कोकिल! केवलं कूज मधुरम्।
आनन्दमनुबुभूषुः स्वरश्रेणीं निःसारय कण्ठकुहरात्।
किमिति काकानां रासभानां गृहाण्याहिण्डसे ?
स्तुहि मयूरम्, मा सेवस्व सूकरम्।
श्लाघस्व गाम्भीर्यं गजस्य, मा मर्दय पादान् ग्रामसिंहस्य, जगत्!

१८. लौकिकपरिज्ञानबाहुल्यात् कारणात्
स्वाधीतविषयावबोधाधिक्यात् कारणात्
नूतनवस्तुजातनिर्मितिनैपुण्यातिशयात् कारणात्
निर्भीति प्रकाश्यमानजनतादोषाच्च कारणात्
प्रत्यग्रा एव जनाः प्राचीनकालिकजनानामपेक्षया प्रशस्ततराः,जगत्!

१९. चञ्चुसूचिर्वयतु पत्राणि नीडनिर्माणार्थम्।
एतेन तस्मै मा शुकोऽसूयतु ;
यस्यापि स्वसामर्थ्यं वर्तत एव
वागुच्चारणरूपम्, अथ च-
मनुजवर्णोच्चारणानुकृतिरूपं ,जगत्!

२०. कोलाहलनिबिडाऽपि पद्धतिः प्रशस्या यत्र
निर्मल आनन्दः समुत्पद्यते।
मौनगम्भीराऽपि पद्धतिर्हेया यत्र
दुरहङ्कारपिशाचिका रुधिरं वमति।
सर्वं मौनं नैवाध्यात्मिकध्यानजं ,जगत्!

२१. यदि च परविरचितपुरातनग्रन्थपथेषु
स्खलनकाले चीत्कार एव तव स्वभावः,

त्वद्रचितग्रन्थमरुभूमिषु न प्रतिबिम्बन्ति त्वया लोके दृष्टाः प्राणिनः,
नापि ध्वनिं चिकीर्षन्ति त्वया साक्षात्कृतानि निर्जीवानि वस्तूनि-
आगामिनि काले तव ग्रन्थेषु निहितदृश्वानो जनाः
‘त्वयाऽनुभूतो राष्ट्र इत्थंभूतलक्षण आसीत्’ इति
कथं जानन्तु ?, जगत्!

२२. कश्चन संन्यासी स्वानुभवमित्थमकथयत्-
‘ध्यानयोगमनुतिष्ठतो मम चक्षुषोरस्फुरन् ग्रहास्तत्रत्या जीविनश्च।’
अपरश्च संन्यासी समभाषत-
‘कृते ध्याने ये स्फुरन्ति ते केवलं किरणा न पुनर्ग्रहाः।’
क्रमेण तयोर्ध्यानयोगः कलहयोगत्वेन पर्यणमत्,जगत्!

२३.किंनाम ‘‘ वर्ल्ड् -स्याँन्स्क्रीट्-कान्फ़ेरे़न्स्’’त्वम् ?
इङ्ग्लीष्कस्य सिंहासनारूढत्वे सति संस्कृतस्य भिक्षायाचकत्वं वा ?
इङ्ग्लीष्मण्डूकरटनत्वे सति संस्कृतकोकिलकन्धराशूलत्वं वा ?
इङ्ग्लीष्शिरसो मकरन्दाभिषिक्तत्वे सति
संस्कृतशिरसः शङ्कुभिर्घट्टितत्वं वा ?
राजसौध इङ्ग्लीष्भाषाया विराजितत्वे
कस्माच्चित्सन्धेश्चोरस्येव संस्कृतस्य प्रविष्टत्वं वा ? ,जगत्!

२४. गर्ते पतितानामुपरि मृद्राशेः प्रक्षेप इव,
पथि पतितानां पादे क्रकचस्य प्रयोग इव,
व्रणितानां व्रणे लवणस्य लेप इव,
जानुशूलेन सवेदनानां शिरसि दारुणा ताडनमिव,
क्लेशग्रस्तानां चक्षुषि धूलेः पातः ,जगत्!

२५. कपिभिरर्धभक्षितानि गलितानि पतितानि च फलानि
शुण्डयाऽऽदाय सप्रमोदमदन्तं गजमद्राक्षम्।
द्रोण्यामन्येन गवाऽर्धपीतं जलं घ्रात्वा
कन्धरामन्यत्र परिवर्तय्य
निराकृतजलपानं गामप्यपश्यं ,जगत्!

२६. हे हे हरिण! आकर्णय ममोपदेशम्।
प्रसन्नस्य सलिलस्य मृदुना स्पर्शेन
हित इव शान्त इव च भासमाने तीरे
पादाभ्यां नर्तनात् प्राक्
नक्रस्य नर्तनं चक्षुर्भ्यां दृश्यते किमिति निरीक्षस्व ,जगत्!

२७. भाग्यवान् पाठकेन जनेन वीक्षितो ग्रन्थः
भाग्यवत्तरं रचयित्रा जनेन भावितं वस्तु।
भाग्यवन्ति सुवर्णभूषणेन भूषितान्यङ्गानि
भाग्यवत्तरं सुवर्णकारेण दृष्टं सुवर्णम्
भाग्यवत्तमा अत्र तारतम्यमभिजानन्तो जनाः ,जगत्!

२८. गुणान् सिंहासने समुपवेशय्य विधेहि पट्टाभिषेकं
दोषांश्च राजसौधद्वाराद् बहिः पादाभ्यां जहि।
अत्र कोऽपि त्वां नाधिक्षिपति, न निन्दति,
‘‘त्वयाऽपराधः कृत’’ इति नैव नैव नैव गर्जति।
परन्तु ‘दोष’ इति शब्दस्यैव
‘गुण’ इत्यर्थं
त्वया विरच्यमाने निघण्टौ मा लिख मा लिख मा लिख,जगत्!

२९. उदास्स्व नीचान्, उपास्स्व आर्यधुर्यान्,
आख्याहि गुणान् सामान्यानामपि
आचक्ष्व लोकप्रसिद्धानामपि दोषान्
दरिद्रिहि स्वाभिमानेनोटजे
मा पुनरेधि अमार्गलब्धसंपत्त्या निर्मिते राजसौधे,
इत्येतदादिवाक्यसूत्राणां वयनेन सृज्यमानाः पटाः
अस्मन्मानसशैत्यनिवारकाः सूक्तिकम्बलाः , जगत्!

३०. हे दन्तिन् तवाग्रे स्थितः प्राणी खड्गीति न जानासि किम् ?
हे खड्गिन् तवाग्रे स्थितः प्राणी दन्तीति न जानासि किम् ?
अहं किं न जानामि यद् युवां द्वावपि परस्परेण युयुत्सू ?
युवामपि न जानीथः, अहमपि न जानामि यत्-
युवयोः कुटुम्बवर्ग्याणां चक्षुर्भ्यः कदाऽश्रु स्रवतीति ,जगत्!

३१. कस्यचिद् विश्वविद्यानिलयस्य वास्तुषु
परदूषणशुल्कत्वेन वेतनं गिलतो मण्डूकानपश्यम्।
तान् भक्षयितुमागच्छतः विद्याद्वेषाग्निं वमतः कालियसर्पांश्चापश्यम्।
तस्माद् विश्वविद्यानिलयाद् बहिस्तु
सानन्दं तृणं चरताम् अन्येषामपि स्वादु तृणं दर्शयतां
हरिणानां वृन्दान्यप्यपश्यम् ,जगत्!

३२. कैश्चिज्जनैरन्विष्यते
परेषां जनानां वैयक्तिकेषु व्यवहारेषु निम्नस्तरीयचिन्तनादिकं-
यैरुदास्यते स्वीयेषु व्यवहारेषु दुरभिमानादिकम्।
यदि तदेतद् भवति, एतच्च तद् भवति-
वसुन्धरायां वृन्दारकालयोऽवतरति,जगत्!

३३.'श्वः कर्तास्मि,आगामिनि मासे करिष्यामि' इत्युक्त्वा
कियच्चिरं व्याक्षिपस्यद्य चिकीर्षितं कार्यम् ?
'श्वो गन्तास्मि तत्स्थलमागामिनि मासे गमिष्यामि' इत्युक्त्वा
कियच्चिरं व्याक्षिपस्यद्य विधातव्यं गमनम् ?
'श्वो मर्तास्मि आगामिनि मासे मरिष्यामि' इत्युक्त्वा
कियच्चिरं व्याक्षिपस्यद्य प्राप्तव्यं मरणम् ,जगत्!

३४. उपविशसि सिंहासने, उटजं मा विस्मर- यः पूर्वं दत्ताश्रयः।
पट्टवस्त्रं धरसि, पटच्चरं मा विस्मर- या पूर्वमाच्छादितशरीरम्।
शेषे हंसतूलिकातल्पे, शष्पशय्यां मा विस्मर- या पूर्वं दत्तशरीरसुखा।
दृष्टिं स्वस्मिन् सासूयां निपातयसे धनिकानां,
दुर्गतिं मा विस्मर- या पूर्वं संभृतस्वाभिमाना,
अट्टालिकायामुपविशसि, मा विस्मर सोपानश्रेणीं
कारणं त्वमेव जानासि, जगत्!

३५. असति त्सरौ खड्गः करेण कथं ग्रहीतव्यः ?
असति सूत्रे पुष्पाणि कथं मालायां बन्धयितव्यानि ?
असति वृन्ते फलानि कथं शाखायामवलम्बितव्यानि ?
असति मूले कथं वृक्षेषु फलानि फलितव्यानि ?
असतीषु सहकारिसामग्रीषु कथं वस्तुभिर्यशः प्राप्तव्यम् ? जगत्!

३६. केचन जनाः क्षुपलतातरुगुल्मानां वर्धनाय
आलवालेषु जलं सिञ्चन्ति प्रीत्या,
क्षुपादिष्वङ्कुरितेषु पल्लवितेषु कुसुमितेषु फलितेषु च
सकरतालिका नृत्यन्ति प्रमोदबाष्पं च मुञ्चन्ति।
अपरे तु जलमसिञ्चन्तः प्लास्टिक्पुष्पाणि तेषु लगयन्ति

सगर्वा मण्डलीकृतकपोलाश्च कत्थन्ते यत्
'वयं यद्येतान् नोदधरिष्याम, एते अमरिष्यन्' ,जगत्!

३७. ''अहं तव पुरस्तान्न गायामि, नापि त्वां गापयामि
परेषां गानं श्रुत्वा स्वयं शिक्षस्व संगीतं,
परन्तु संगीते गुरुं मां सर्वत्र ख्यापयितुं त्वामनुमन्ये,
तदर्थं त्वं मह्यं प्रतिमासं देहि दक्षिणाम्''
इति वाक्यं न श्रूयते।
''अहं तव पुरस्ताच्चित्रस्य चित्रणं न करोमि, नापि त्वया चित्रयामि
परैश्चित्रितं चित्रं दृष्ट्वा स्वयं शिक्षस्व चित्रकलां,
परन्तु चित्रे गुरुं मां सर्वत्र ख्यापयितुं त्वामनुमन्ये,
तदर्थं त्वं मह्यं प्रतिमासं देहि दक्षिणाम्''
इति वाक्यं नैव नैव श्रूयते।
केषुचन विश्वविद्यानिलयेषु कदाचित्-
''अहं न संशोधनं शिक्षयामि नापि मम संशोधनप्रबन्धं दर्शयामि,
परेषां संशोधनकृतीः पठित्वा स्वयं शिक्षस्व संशोधनं,
परन्तु संशोधने गुरुं मां सर्वत्र ख्यापयितुं त्वामनुमन्ये,
तदर्थं त्वं विश्वविद्यानिलयाय देहि दक्षिणाम्'' इति वाक्यं तु
भूयो भूयः कर्णपटलं ताडयति ,जगत्!

३८. जिज्ञासस्व सुविज्ञातविषयमात्रे तुण्डः कथमुद्घाटनीय इति;
अथ चाविज्ञातविषयेषु तुण्डे कथं तालकं बन्द्धव्यमिति च;
शुश्रूषस्व केवलं तेषां जनानां वचांसि-येषां बोधः स्वबोधादधिकतरः।
सुस्मूर्षस्व केवलंताननुभवान्
ये जीवने किमपि साध्नोतुं प्रेरणां प्रायच्छन्।

दिदृक्षस्व तद् वस्त्ववहितेन मनसा
यत्र नम्रमुपविशति किमपि वैशिष्ट्यं यदुत्कृष्टं,
न तु सगर्वं राराजते तद् वैशिष्ट्यं यदपकृष्टं ,जगत्!

३९. शम्बूकं (Snail)दृष्ट्वाऽवदं यत्
''त्वं न जानासि डयनेन जायमानमानन्दम्।अहं तु जानामि।
अहो! मेघान्तराले डयनेन स्वर्गमिवानुभवामि।''
ततश्चटकं दृष्ट्वाऽवदं यत्
''डयनं किल परमाद्भुतमनुभवं ददाति।पूर्वमहमप्यडये।
अद्यत्वे न डिडयिषे।पर्याप्तोऽभवड्डयनानन्दः।''
ततो मम नयनपथे
गृधः, बकः, हंसः, आल्बट्रास् (Albatross) च पतिताः।
झटित्यात्मानं शिलाया अधस्तान्न्यगूहयम् ,जगत्!

४०. पाठयितुमर्हा गुरव इति,
पाठ्याः शिष्या इति च श्रुतमस्माभिः।
कदाचिच्चैतत् कुतुकं पश्यामः केषुचन विश्वविद्यानिलयेषु-
जानुभ्यामंहनं कर्तुमप्यक्षमाः
धावनं शिक्षयितुम् अर्हानां योग्यं पीठमारुह्य
सानन्दं कबलीकुर्वन्ति फलानि ,जगत्!

४१. प्रसिद्धिमीप्सुः किमपि किमपि विधत्स्व।
सर्वेषां पुरस्तात् लङ्घस्व, शीर्षासनं कुरु, द्राङ्क्ष,आक्रोश,
पङ्कं वा सर्वत्र प्रक्षिप।
यद्येतैरपेक्षितया मात्रया प्रसिद्धिर्न लभ्यते,
आर्यद्राविडशब्दौ समादाय कोलाहलमारभस्व ,जगत्!

४२. पनसोऽपि सानन्दं श्वसिति, पनसरोपिणोऽपि स्मितं कुर्वन्ति,
पनसफलमानन्देनास्वादयन्तोऽपि जीवन्ति,
तेषां मध्ये पनसमधिकृत्य ग्रन्थानपि केचन रचयन्ति।
एवं सति
रुदतां शुष्कपनसशाखापट्टीमात्रपण्डितानाम् अश्रु
किमर्थं परिमार्जयाम,
किं कथयाम च तेषां विषये ये
''पनससंख्यापट्टीं ग्रन्थे न कुर्वन्त्येते तस्मादेतेषामौदासीन्यहेतोः
पनसो मृतः पनसो मृतः,
पनसरोपिभिः जलसेकेन पनसवृक्षं पोषयद्भिस्तं वर्धयद्भिश्च
पनससंख्यापट्टीकारिभ्योऽवगन्तव्यं बह्वस्ति '
इति वदन्तः सूक्ष्मं बुद्धिवैभवं प्रदिदर्शयिषमाणाश्च
आरभट्या ताण्डवनृत्यमारभन्ते यत्, तत् सहेऽहम्।
तेषां ताण्डवनृत्यमभिनन्दन्तः केचन जनाः
यत् सतालं गानं कुर्वन्ति तत् संकष्टाय मे जगत्!

४३. जगदिदं सदाऽपि जङ्गमं न तु स्थावरम्।
स्थावरमिवैतदूहित्वा यत् क्रियते, यदपि चिन्त्यते
तदपि जङ्गमम्।
यदवलम्बनेनैतत् सर्वं क्रियते चिन्त्यते च
तत् स्थावरं वा जङ्गमं वेति विचारणायां सत्याम्
उद्भवति तत्त्वशास्त्रम् ,जगत्!

४४. रटन्तु काका वा घूंकुर्वन्तु घूका वा भषन्तु श्वानो वा।
कियच्चिरं तेषां वाक्यानि श्रूयन्तां, वैरस्यमनुभूयतां,

तदुक्तान्यपरेभ्यो ज्ञाप्यन्तामसमाधानं चोत्पाद्यताम् ?
आकर्ण्यन्तां चुंकृतानि चटकानामपि, शुकानामपि-
यैः क्रियते सरस्वत्युपासना,
यैश्च न विधीयतेऽन्येषां जीविनामवहेलना, नाप्यपमानना,जगत्!

४५. यदि विदधासि परोपकारं
स्वभुजास्फालनं कुरुष्व, मर्दलं वादय, भेरीं च ताडय,
नात्र कोऽपि दोषः।
परेषां त्वत्तो यदि न किञ्चित् प्रयोजनं,
किं फलं कण्ठेकृतैरन्यरचितैः,
त्वया तुण्डान्निःसार्यमाणैश्च सुभाषितैः जगत्!

४६. अवधत्स्व जिह्वायाश्चलनेषु तत्र-
यत्र सम्यगधीतग्रन्थानां विदुषां समवायः अस्ति,
यत्र व्यवहारज्ञानां बुद्धिमत्तराणां व्रजस्तिष्ठति,
विशेषतस्तत्र, यत्र-
ज्ञातां वार्तां सलोपागमादेशं प्रचिकाशयिषतां
पत्रिकासंपादकानां वृन्दम् उत्कर्णं भवति जगत्!

४७.वादविवादव्याघ्रभूयिष्ठे विपश्चित्कानने
शास्त्रनखरानुपयुङ्क्ष्,
विविधवस्तुसूत्रोते पटे ,नैकदघ्नाभिः लेखनकूर्चिकाभिः
गद्यपद्यनाटकचम्पूस्तोत्रवर्णचित्राणि चित्रयसि,
संशोधनशिलाप्रतिमां टङ्कयसि च।
सत्यपीत्थंलक्षणे सामर्थ्ये-
''संस्कृतभाषया किमप्यरचयन्तः,

केवलं संस्कृतेतरया भाषया संस्कृतविषयकान् ग्रन्थान् रचयन्तो विदेशीया एव हृदि दधति संस्कृतं न पुनर्भारतीया'' इति मस्तिष्कहीनानां मूर्खतमस्तुत्यानां च दुर्भाषणं श्रुत्वा किमर्थं जोषमुपविशसि ? जगत्!

४८. यदि-
तन्न दोषाय यल्लिलगयिषसि मयूरे गर्दभस्य पुच्छम्,
तन्नापराधाय कल्पते यद् युयोजयिषसि कोकिले काकस्य कन्धराम्,
तन्न न दोषलेशं जनयति
यत् सिसृक्षसि वेतण्डे वराहस्य वदनम् ;
तच्च प्रमादाय यद् बिभन्त्ससि संस्कृतेन रचिते ग्रन्थे
इङ्ग्लीष्भाषया विरचितां पीठिकां जगत्!

४९. कल्मषं सम्मार्जय,तत एव गृहभित्तिषु चित्राणि चित्रय,
तत एव च रङ्गवल्लीं रचय,
कल्मषमार्जनात् प्राक् चित्रितानि चित्राणि न स्थेष्ठानि।
यदि सम्मार्जनी नास्ति,स्वयं निर्माहि सम्मार्जनीम्।
यदि सम्मार्जनीं निर्मातुं न जानासि,
गत्वाऽऽपणं सम्मार्जनीं क्रीणीष्व ,जगत्!

५०. कियच्चिरमभिदधासि पूतिगन्धिनं शवमधिकृत्य-
''परिमलप्रसूः पुष्पमञ्जरीयम् '' इति ?
प्रदरं निखन, शवं निधेहि, तैलं सिञ्च, ज्वलनं च प्रज्वालय।
धगधगायमानेन ज्वलनेन दह्यतां शवः। ततः-
पुष्पतरुं रोपय,गच्छता कालेन आघ्राहि परिमलं,
''पुष्पाणि सुगन्धीनि'' इति च घोषय, जगत्!

५१. घीङ्कृतमस्तु कर्णकठोरो मनुष्याणां कृते
यत् स्यात् सरसाय संलापाय गजस्य कृते।
नर्दनं मास्तु कर्णरसायनं मनुष्याणां कृते
यत् स्यात् योगक्षेमविचारणायै वृषभस्य कृते।
गर्जनमस्तु हृदयकम्पकृन्मनुष्याणां कृते,
यत् स्यात् संगीतं सिंहस्य कृते, जगत्!

५२. 'सुवदनेन सुघटना, दुर्वदनेन दुर्घटना भवति,
तस्माच्चिन्तयेद्गङ्गां न पुनः कच्चरपरीवाहम्', इत्यादिकां
पुनः पुनरुपदिश्यमानां देशनां
कियच्चिरं श्रावं श्रावं श्रवणशूलमनुभवसि ?
पीयूषकलशेऽपि ध्याते, सर्पं नापश्यः किं यो विषं वमति ?
छुरिकया भिद्यमाने देहेऽपि ऊहिते,
हारं न न्यशामयः किं यः कोमलः सुगन्धी कण्ठे आसज्जितश्च ?
''सुष्ठुचिन्तनेन सुष्ठु संभवति, दुष्ठु चिन्तनेन च दुष्ठु संभवति''
इतीदं तु केवलं प्रायोवादो न तु दर्शनम् ,जगत्!

५३. हे इण्डियाराष्ट्रस्थे, यूनिवर्सिटि!
नाहं विवक्षामि ''त्वयि निवासिन्याः सरस्वत्या मुखारविन्दान्न निःसरति मन्दहासः कदापि'' इति।
नाहं विवक्षामि ''त्वयि निवसतां पिकानां कण्ठान्न निःसरति कुहूध्वनिः कदाऽपि'' इति।
एतत्तु विवक्षामि ''कदाचित् त्वद्भवनस्थान् धृतसरस्वतीभक्तवेषान् सरस्वतीद्रोहिणो दृष्ट्वा, काकानां गृहेषु सम्मार्जनकर्म कुर्वाणान् पिकाश्च दृष्ट्वा नयनाभ्यामुत्सृजामि शोकाश्रु'' इति , जगत्!

५४. यदा ज्ञानस्य प्रस्थानस्थलं तवैव मस्तिष्कं
प्राप्यमपि स्थलं तवैव मस्तिष्कं,
साध्नोषि त्वं बहूनि साध्यानि।
तव मस्तिष्कं पाडयित्वा,
(=पादाभ्यां ताडयित्वा।पाड लत्ताप्रहारे इति मया सृष्टो धातुः)
मस्तिष्कवतां परेषां जनानां पादं यावत् संवाहयसि तावत्,
आहिण्डसे ज्ञानशून्ये जगति, जगत्!

५५. पत्रेषु गलितेषु,नूतनेषु पत्रेषूद्भूतेषु,
कथञ्चिद् विस्मर्यते पूर्वपत्रमरणदुःखम्।परन्तु-
प्राप्तडयनशक्तिषु पक्षिपोतेषु गतेषु ,
क्रमशस्तत्पित्रोरपि गतयोः,
शून्यं नीडं दर्शं दर्शं कथं जीव्यतां वृद्धेन वृक्षेण जगत्!

५६. परिचितैस्त्रिचतुरैः सुबन्तैस्तिङन्तैश्च
विचारघनं कं ग्रन्थं रिरचयिषसि त्वम् ?
त्रिचतुरैर्गुल्मैः कुब्जैर्वृक्षैस्तृणैश्च
सुरभिनिबिडं नन्दनवनं चिकीर्षसि किम् ? ,जगत्!

५७. शिर आरुह्य गन्धमूषिको यदि गजति,
निन्द्यो जनः स य आरोहयमाणः।
सिंहासनमारुह्य गर्दभो यदि सिंहति,
निन्द्यो जनः स यस्तूष्णींशीलः।
परेण जनेन ग्रन्थान् रचयन् तान् स्वकृतान् यदि कोऽपि घोषयति,
निन्द्यो जनः स यः स्वयं ग्रन्थान् रचयित्वा
रचयितृत्वेन परस्य नाम लिखति,जगत्!

५८. साधनेषु निमज्जत उत्कृष्टफलान्यवचिन्वतो जनान् निशाम्य
आश्चर्योदधौ निमज्जेयं वा ? असूयोदधौ निमज्जेयं वा ?
फलप्रदातारं स्तरमप्राप्य त्यक्तसाधनमात्मानं दृष्ट्वा
शोकोदधौ निमज्जेयं वा ? कोपोदधौ निमज्जेयं वा ? ,जगत्!

५९. मम जीवनक्लेशादधिकतरः क्लेशोऽस्त्यन्येषां जनानाम्।
अस्रवन्ममाश्रु यदा कदा ,तेषां तु प्रतिदिनमश्रुधारा।
ते मन्दं मन्दमुद्घातिनि पथि गत्वा वृक्षमारुह्य फलान्यस्वादन्त।
अहं पुनः सोपानैः पुष्पैश्च समुपेते पथि
पदमेकमपि निधातुं न शक्नोमि, तङ्खामि चाधुनाऽपि, जगत्!

६०. तनुरशुद्धा वञ्चनाजन्यधनक्रीताहारपोषितत्वाद्धेतोः,
वागशुद्धा सभ्यताया अभावाद्धेतोः,मनश्चाशुद्धं दुर्विचाराद्धेतोः।
इत्थंभूतलक्षणान् जनान् ये चिन्वन्त्यभिचयनस्य(Election)[१] समये
ते शोच्यास्तनुवाङ्मनसामशुद्धत्वाद्धेतोः, जगत्!

६१. अवमस्त्वमसकृदेतावन्तं कालं विषं सर्वत्र,
असृजश्च त्वमसकृदेतावन्तं कालं शवान् सर्वत्र।
सिञ्च त्वं सकृदधुना पीयूषं सर्वत्र,
वीक्षस्व त्वं सकृदधुना विकसितानि सुमानि सर्वत्र,
आजिघ्र च त्वं सकृदधुना सुमनिःसृतं सुगन्धं सर्वत्र,जगत्!

६२. हे योगिब्रुव! त्वमुपदिशसि जनतां
''भूषणेषु संपत्सु देहसौन्दर्ये च व्यामोहं त्यज,
कस्मिंश्चिद्दिने एतत्सर्वं त्यक्त्वा कुत्रापि यास्यसि'' इति।
यदि-भूषणे प्रीतिमत्यः संपद्भिरनुभूतसुखाः,

१.अभिचयनम्=Election. निर्वाचनमिति शब्दस्य निष्पत्तिः सन्दिग्धेति कृत्वा नवीनोऽयं शब्दः कृतः।

सौन्दर्ये च लग्नहृदयाः जना नाभविष्यन्
केभ्यः त्वमुपादेक्ष्यः ? अवधत्स्व-कस्मिंश्चिद्दिने
उपदेशप्रवचनादिकानि त्यक्त्वा त्वमपि कुत्रापि यास्यसि,जगत् !

६३. ''चक्षुर्योगेनाभ्यस्तेन नयनदोषो नश्यति' इति कथय।
दत्तधनेष्वभ्यस्तचक्षुर्योगेषु अविनष्टनयनदोषेषु जनेषु पृच्छत्सु,
''चक्षुषोर्दोषस्य चक्षुर्योगेन निवारणं न मुख्यम्
आत्मदर्शनं तु सुखाय''इति जल्प।ते मूर्खा जोषमुपविशन्ति।
''दन्तयोगेनाभ्यस्तेन विनष्टानां दन्तानां स्थले
नवीना दन्ता जायन्ते'' इति वद।
दत्तधनेष्वभ्यस्तदन्तयोगेषु जनेष्वजातनवीनदन्तेषु पृच्छत्सु,
''नवीनानां दन्तानां दन्तयोगेनोत्पत्तिर्न मुख्या
आत्मदर्शनं तु श्रेयसे'' इति शंस।ते बालिशा न क्रुध्यन्ति।
''व्यवहारयोगेनाभ्यस्तेन
व्यावहारिक्यः समस्या नश्यन्ति'' इति ब्रूहि।
दत्तधनेष्वभ्यस्तव्यवहारयोगेषु
अविनष्टव्यावहारिकसमस्याकेषु जनेषु पृच्छत्सु,
''व्यावहारिकीणां समस्यानां व्यवहारयोगेनापनयनं न मुख्यम्
आत्मदर्शनं तु परमानन्दाय'' इति लप।ते मूढास्त्वां महर्षिं मन्यन्ते।
सिद्ध्यतु मा वा सिद्ध्यतु आत्मदर्शनयोगोऽपरेषां जनानां ,
तव तु धनयोगो बाढं सेत्स्यति,जगत् !

६४. केचन स्याँस्क्रीट्लाङ्ग्व्ज्भक्तोत्तमाः
''मम्मी'', ''ड्याडी'' इति द्वयोः शब्दयोः द्वेषबाणानस्यन्तः
सनातनं धर्मं रिरक्षिषन्तश्च

''अम्ब ! कम् हियर्'',''तात ! कम् हियर्'' इति वाक्याभ्यां संप्रदायं पूतं भवन्तं मन्यन्ते !
इङ्ग्लिष्भाषायाः शब्देषु वाक्येषु साहित्येषु च निमग्नाः सन्त एते तयैव भाषया लपन्तो व्यवहरन्तो ग्रन्थान् रिरचयिषन्तश्च, शब्दद्वयमात्रोच्चाटनमन्त्रजपेन संप्रदायश्रद्धाडिण्डिमं नादयन्ति, जगत्!

६५. सर्वेऽपि कूजन्तः पक्षिणो न कोकिलाः, केचित् काकाः।
सर्वेऽपि कवयो न वाल्मीकयः, केचित् कथञ्चिद्योजितशब्दाः।
सर्वेऽप्यध्यापका न पतञ्जलयः, केचिदन्यकृतटिप्पणीवमनविज्ञाः।
सर्वेऽपि वैयाकरणा न चारुदेवशास्त्रिणः, केचिद् वैयाकरणखसूचयः।
सर्वेऽपि कवयो न भट्टश्रीमथुरानाथशास्त्रिणः, केचिच्चोरकवयः।
सर्वाण्यपि संलग्नसुभाषिताभिधानानि पद्यानि न सुभाषितानि, कतिचिदविवेकिजनमात्रप्रियाणि विवेकिजनजुगुप्साधायकानि दुर्भाषितमात्राणि, जगत्!

६६. अवधीरय्य निज-मस्तिष्कगुरुम् ,अवगणय्य ग्रन्थगुरुम्,
अवज्ञाय च व्यवहारगुरुं,
सदाऽपि पर-मस्तिष्कगुरौ दासत्वं दिदर्शयिषुभिर्जनैः
समग्रमिदं भूमण्डलं गुरूभूतम्, जगत्!

६७. ''-'स्याँन्स्क्रीट् लाङ्ग्वेज् परमोत्कृष्टम्' इति सदाऽपि किल युष्माकं कण्ठकुहरादुद्गच्छति वाग्धारा।
किमर्थं यूयं संस्कृतग्रन्थानां पीठिकां 'डिफ़रेण्ट्'भाषया रचयथ ?
संस्कृतभाषोद्याने पीठिकायोग्यानि
सुबन्तानि तिङन्तानि कृदन्तानि च पदानि
सन्धिसमासादिकानि वाक्यानि च न पुष्यन्ति किम् ?''इति

स्याँन्स्क्रीट्प्रोफ़ेसर्कान् अन्ये जनाः पृच्छ्यासुः।
स्याँन्स्क्रीट्प्रोफ़ेसर्काश्च
'डिफ़रेण्ट्'भाषारचितपीठिकायोजनरूपं कापेयं त्यज्यासुः,जगत्!

६८. अकृतनराधमपादसंवाहनाः , अविहितानर्हस्तुतयः,
अविरचितनीचप्रोत्साहाः, अनिगूहिताषाढभूत्यपराधाः,
अदर्शितमिथ्यासार्वज्ञ्याः, अनपमानितविशेषज्ञाः,
अप्रयतितस्वभुजास्फालनाः, अनुदासितपरसिद्धयश्चार्यमान्याः,
स्वयं जीवन्ति, अपरानपि जीवयन्ति, जगत्!

६९. न वक्तव्यं पिपीलिका गर्विणीति, नाधिक्षेप्तव्यं सा गाढदम्भेति,
न निन्दितव्यं च सा सदुरहङ्कारेति,
यदि वदति सा दृष्टगजा-
''कियत् कष्टं सोढवता भाव्यं गजेन पिपासुना पानकाले,
अतीवभारां शुण्डाम् उद्धरता ;साहाय्यकं करवाणि वा-
शुण्डया क्रियमाणे जलस्य चूषणे, तस्या उत्थापने,
तस्यास्तुण्डे स्थापने, जलस्य च तुण्डान्तःप्रक्षेपे '' इति।
किन्तु ज्ञातव्यं सा वराकी निबिडमौढ्येति, जगत्!

७०. 'पूर्वतरैस्तत् साधितं स्यादहन्त्वेतत् साधयामि'
इति चिन्तयित्वा प्रतिष्ठमानैर्जनैः
किमपि साध्यते , आसाद्यते, दीयते, जीयते च।
'अस्मत्पूर्वजैरेव सर्वं साधितं, मया साधयितुं किमपि नावशिष्टम्'
इति ब्रुवाणैर्जनैः, अवस्फोट्यते,जृम्भ्यते, शय्यते, सुप्यते च, जगत्!

७१. कश्चन कूपमण्डूकोऽपश्यद् व्योम्नि डयमानं विहायसम्
अघघत् अकथयच्च सोत्प्रासं-

‘‘विहायसा गच्छन् अनेकगिरिनदीदरीकाननपत्तनानि पश्यन्
संदृष्टविविधवर्णोऽनुभूतविचित्रकष्टसुखश्च सन्
विरचितनानानवीनविषयकसंस्कृतग्रन्थो वराकोऽयं-
संस्कृतग्रन्थे पीठिकां संस्कृतभाषयैव रचयित्वा योजयति।
न केवलमेतदेव, अपि तु-इङ्ग्लीष्भाषया कमपि ग्रन्थं न रिरचयिषति,
धिगिमं कूपमण्डूकम्’’ इति , जगत्!

७२. कस्य जनस्य पुरस्तात् कथयानि हृदुत्थां समस्याम् ?
अपरेण श्राविताायां समस्यायां, परिह्रियते किं समस्या ?
मय्येव समस्याहेतुत्वमुद्भाव्य स जन उपदेशधारां वर्षति वा ?
हास्यास्पदं किमपि स्वास्यान्निःसारयति वा ?
श्रुते च परोक्ते परिहारे-
‘इदं ममैवाभास्यत्, यद्यहं सावधानमचिन्तयिष्यम् ’
इति विचारो मयि जन्म प्राप्नोति वा ?
‘एतेन सूचितात् परिहाराद् वरतरः परीहारो भात्यधुना मे
किमर्थं हठात् तमुपासर्पम्’ इति सङ्कटं जायते वा ?
कथितसमस्यापरिहारोऽन्यो जनः
‘लघुतरां समस्यां परिहर्तुमशक्नुवन्नेष मामुपासर्पत्
समस्यापरिहाराभ्युपायसंसूचनेन अहमेवैतम् उदधरम्’
इति पटहं सर्वत्र वादयन्
‘किमर्थं महाप्रमादमकरवं यत् पटहवादकं तमुपासर्पम्’
इति मदीयं मौर्ख्यं प्रत्यभिज्ञाय , मां कृशं करोति वा ?
अश्रावितायां च समस्यायाम्, अनिवारिते दौर्भाग्ये समुपनते
‘यदि मम समस्यामेतस्य पुरस्तादकथयिष्यं

परमोत्कृष्टं परिहाराभ्युपायमेष असूचयिष्यत्।
स्वाभिमानेन विघ्नितोपक्रमो दूयेऽहमधुना’
इति पश्चात्तापेन मम हृदयं द्रवीभविष्यति वा ?,
मम समस्यां कण्ठकुहरान्निःसारयाणि वा ?
आहोस्वित् कण्ठप्रदरे निखनानि वा ? जगत्!

७३. अस्मिन् कोटौ न तिष्ठति
तस्मिन्नपि कोटौ न विश्राम्यति दोला, या-
नुद्यते तत इतः केनापि जनेन, यः-
दोलायामेवोपविशन्  नुदति, आहोस्विद् बहिस्तिष्ठन् प्रेरयति।
एतस्मिन् विषये न लगति,
तस्मिन्नपि विषये न चिरं तिष्ठति मनः।
मन इदं नोद्यते तत इतः कन्दुक इव-एतत् स्पष्टम्।
केन सत्त्वेन ? इत्येतत्तु न स्पष्टम्, जगत्!

७४.‘‘फलमत्तुं दन्ताः किमावश्यकाः  ?
पथि चलितुं पादाः किमावश्यकाः ?
पुष्पं घ्रातुं नासिका किमावश्यकी ?
खे डयितुं पक्षौ किमावश्यकौ ?’’ इति पृच्छन्ति ते ये-
‘‘ शिक्षणमन्त्री भवितुं
विद्या किमावश्यकी ?’’ इति पृच्छन्ति , जगत्!

७५. सत्यामपि सस्यश्यामलायां भूमौ
‘सर्वत्र मरुभूमयो दृश्यन्ते न कुत्रापि जलकणिका’ इति
किमर्थमाक्रोशानि ?
भ्रमराकर्षणविचक्षणं पुष्पोद्यानं परितो भ्रमन्

'सर्वत्र कण्टकाः करतलं तुदन्ति न क्वाप्यस्ति सुगन्धः' इति किमर्थमारभटीं रचयानि ?, जगत्!

७६. सर्वत्रापि सर्वदापि ब्रह्माण्डे
अहमिति स्फुरत्यनुभवः। तस्मात्-
देशकालनिरपेक्षोऽयम्।
देहप्रमितोऽहमनुभवोऽहङ्कारः
ब्रह्माण्डव्याप्यहमनुभव आत्मा।
अहङ्कारानुभवाय नावश्यकं ध्यानं तस्य स्फुटमनुभूयमानत्वात्।
आत्मज्ञानाय परमावश्यकं ध्यानं तस्यास्फुटत्वात्।
इदमेव ध्यानं महायोगो , जगत्!

७७. 'अमुष्य कवेर्जीवितसमये भारतमेतत्स्वरूपमासीत्', 'अमुष्य विदुषो जीवनकाले व्यराजन्तामूनि वस्तूनि', इत्येवं च कियच्चिरं संशोधनं करवाणि ?
मयाऽपि विरचयिष्यमाणान् ग्रन्थानधिकृत्य भाविनः संशोधकाः-
'एतेषु ग्रन्थेषु भारतमित्थङ्कारं प्रतिबिम्बति '
इति यथा संशोधनं कुर्युस्तथा
प्रतिबिम्बित-मज्जीवितकालिक-भारतानां कृतीनां रचनां
कदाऽहमारप्स्ये ? , जगत्!

७८. उन्नतं प्रदेशं वृक्षशखापर्वताधित्यकादिकमारुह्य
नदीं वीक्षस्व येन तत्रत्या वक्रता वीक्ष्यते।
नद्यामेव स्थित्वा यदधिनदि ज्ञायते तद् भिन्नम्।
तनोर्बहिर्गत्वा तनुं परीक्षस्व येन तत्स्वरूपं गुणदोषोभययुक् स्पष्टायते।
तन्वामेव स्थित्वा यदधितनु ज्ञायते तद् भिन्नम्।, जगत्!

७९. ‘‘कमपि शाकम् अविक्रेतुर्जनस्य आपणे
विराजमानेन ‘शाकापण’ इति फलकेन किम् ?’’ इति पृच्छ।
‘‘किमपि चित्रम् अचित्रयितुर्जनस्य
चित्रकार इति बिरुदेन किम् ?’’ इति पृच्छ।
किन्तु ‘‘किमपि संशोधनम् अकर्तुर्जनस्य
प्रोफ़ेसर् इति बिरुदेन किम् ?’’ इति मा पृच्छ-
यस्य वेतनेऽतितमां वृद्धिर्भवति तेन बिरुदेन, जगत् !

८०.अन्येन नृत्यं कारयित्वा
‘अहमेवानृत्यम्’ इति गप्पं कर्तुं न शक्यते।
अन्येन प्रवचनं दापयित्वा
‘अहमेव प्रावोचम्’ इति गप्पं कर्तुं न शक्यते।
अन्यं नभसि डाययित्वा
‘अहमेवाडय’ इति गप्पं कर्तुं न शक्यते।
किन्तु अन्येन ग्रन्थं रचयित्वा
‘अहमेवारचयम्’ इति गप्पं कर्तुं बाढं शक्यते, जगत् !

८१.एकत्र सर्पाद् बिभ्यन् कोऽपि पक्षी स्वपोतान् रिरक्षिषति।
अन्यत्र मयूरः प्रसारितपिञ्छचामरो मण्डलरासकं कलयति।
युगपत् कुत्रचिदातङ्कः कुत्रचिदानन्दश्च।
मम नेत्रे पर्याप्ता शक्तिर्भूयाद् द्रष्टुम्, अश्रु प्रवाहयितुं च।
मम हृदयकमले पर्याप्ता शक्तिर्भूयात्
न केवलं प्राणमकरन्दं सर्वाण्यङ्गानि नोदितुम् अपि तु विकसितुं च।
सर्वेषु वर्णेषु सृज्यासं ममास्तित्वं
सर्वे च वर्णा मयि सृज्यासुः स्वास्तित्वं , जगत् !

८२.येषां जनानां वसुधैव कुटुम्बकं ते  कदाचित्-
स्वीये कुटुम्बे विषं वमन्ति,
परेषां कुटुम्बे पीयूषं प्रवाहयन्ति,
स्वीये गृहे भषन्त्युग्रं,
परगृहेषु च लाङ्गूलं चालयन्ति, जगत्!

८३.यस्मिन् दिने
अधिकारसिंहासने राजमानैर्जनैः
परजनरचितं भाषणं नीरसेन कदाचिदशुद्धेन चोच्चारणेन पठ्यते
सप्रयोजनकर्मलेशहीनैर्मूढैश्च श्रूयते
तद् दिनं विद्धि अनुष्ठितस्वातन्त्र्योत्सवं , जगत्!

८४.शास्त्रग्रन्था नृत्यन्ति जिह्वाग्रे मम,
कोषवाक्यानि क्रीडन्ति वदने मम,
साहित्यरचना गायन्ति कण्ठे मम,
एतत् सर्वं परैर्दत्ता भिक्षा।
स्वयं मयि पिपक्षति तु-  धान्यानि धावन्ति शाकानि पलायन्ते,
स्तब्धो भवति हस्तः, कण्ठः शुष्यति, मुखं च दीनम्लानं भवति
दर्वी तु मां तिताडयिषति , जगत्!

८५.''अन्येन जनेन निर्मापितं तद् गृहं यत् परमाद्भुतम्।
अपरेण जनेन कारितमिदं सदनं यन्नयनमनोहरम्।''
इति व्यर्थेन प्रलापेनैतावन्तं कालमनैषीः।
''मयैव निर्मितमिदं गृहं यदतीव सुन्दरं-
यस्य च निर्माणे एतावान् क्लेशः सोढो मया ''
इति सगर्वं कदा घोषयिष्यसि ?, जगत्!

८६. केचन जनाः किल परमविचित्रा ये
स्वोपकारसाहस्रीं कृतवतो जनान्
आगर्भशत्रून् मन्यमानास्तेभ्यः क्रुध्यन्ति गर्जन्ति च रक्तनेत्राः।
विरचितस्वापमानानां जनानां
पादौ संवाहयन्ति,चाटुशतानि च गायन्ति , जगत्!

८७.असत्यं तदा श्रद्धेयं यदा सत्यमश्रद्धेयम्।
अज्ञाः सुज्ञा इव तदा नटन्ति यदा सुज्ञानामज्ञत्वं ख्याप्यते।
पिशाचा देवा इव तदाभिनयन्ति यदा देवाः श्लाघन्ते पिशाचान्।
अस्तव्यस्ततैव सुव्यवस्थेति घुष्यते
यदा सङ्घटना सङ्घट्टनत्वेन परिवर्त्यते, जगत्!

८८.कोकिलाः कूजन्ति, नीलकण्ठा नृत्यन्ति,
चञ्चुसूचयश्च नीडं निर्मान्ति।
पुष्पाणि स्मयन्ते, षट्पदा गुञ्जन्ति, हरिणाश्च शान्तास्तृणं चरन्ति।
ध्यानयोगे मग्नानि कतिचन मस्तिष्काणि।
मेघविघ्नं विना दीधितयः पृथ्व्यां प्रसरन्ति।
येनाहं सप्रमोदं निमज्जामि-
सरस्वत्या दन्तपङ्क्तेर्निस्सरन्त्यां ,माञ्च पावयन्त्यां प्रकाशधारायाम्।
परन्त्विदं सर्वं कस्माच्चिद् विश्वविद्यानिलयाद् बहिः , जगत्!

८९.हे काक !
यत् त्वया हठापेक्षा(Demand) कृता पिकराज्ये पट्टाभिषेकाय-
तन्न कल्पते तवापराधाय।
तवाशा यत् फलिता तत्
अ-स्वाभिमानगन्धानामविवेकिनां च पिकानां किल चेष्टितेन, जगत्!

९०.अवधाय दुर्गतानपि निगूहिताश्रुकान् स्मितभाषिणश्च
समस्योदधिमग्नानप्यप्रकाशितदुःखान् हास्यकारिणश्च ;
मम चक्षुषोरश्रुधाराममार्जयं
घघनं (guffaw) च प्रारभे, जगत्!

९१. न गर्व्यासं धनराशिना
नापि दभ्यासं परम्परानुगतस्य कर्मणोऽनुष्ठानेन।
दृश्यासं दृढां सम्मार्जनीं, तां ग्रहीषीय, तया च
मनसि वर्तमानं मालिन्यराशिं सम्मार्ज्यासम्, जगत्!

९२.सश्रद्धं विहितशास्त्राध्ययनानां केषाञ्चन
'श्रुतैर्द्वित्रैः प्रवचनैः पठितैस्त्रिचतुरैः सूत्रैः
कण्ठेकृतैरङ्गुलीगणनीयैश्च भाष्यैरारब्धेऽध्यापने किं नेदं वञ्चना ?'
इति चिन्ता।
प्रतिभावतां केषाञ्चित्
' मत्परिचितैर्द्वित्रैः सुबन्तैस्त्रिचतुरैस्तिङन्तैरङ्गुलीगणनीयश्च कृदन्तैः
कं महाग्रन्थं रचयेयम् ?' इति चिन्ता।
अन्येषां तु गर्विष्ठानामिष्टकाया अपि ज्ञानेन हीनानां
'राजसौधं निर्मित्सवः के मयेदानीं शिक्षणीया'इति चिन्ता, जगत्!

९३.'मम गृहेऽहं वसामि'इति साभिमानं कथनं कथं नाम दोषाय ?
मम गृहान्तः सन्धिं कृत्वा प्रविष्टायां छुछुन्दर्यां,
तां पलाययितुं च मया क्रियमाणः प्रयत्नः कथं नाम दोषाय ?
अनुमतिं विना मम गृहान्तर्हठादाक्रम्य मालिन्यं प्रसारयितो नीचान्
यदहं विरुणध्मि तत् कथं नाम दोषाय ?, जगत्!

९४. ‘‘दूरादेव विषं निष्ठीवसि, हे सर्प ! येनाहं म्रिये-
ततो मम बन्धवो रुदन्ति, मम सन्तानश्च भवत्यनाथः।
‘नाहं दशामि’इति गप्पमपि जल्पसि, किं तव नास्त्यन्तःसाक्षी ?’’
इति शिशोरिव क्रन्दनेन, सावेशयाऽऽरभट्या वा किम् ?
गृहाण दण्डं, ताडय घातय च सर्पम्, जगत्!

९५. पूर्वं तवाश्रुणाऽऽर्द्रं भूतलं जना अपश्यन्, ये-
संप्रति पश्यन्तु कर्मणि लग्नौ तव हस्तौ पादौ च।
संप्रति शृण्वन्तु तव वचनानि,
दारयन्तां तव गर्जनेन श्रुतिपुटानि,
संप्रति कर्मसिद्ध्या विस्मायय विश्वं,
अश्रुस्त्रावकं चक्षुर्न तव साहाय्याय।
कार्यकारिणौ हस्तौ पादौ, आवश्यकभाषणपरा जिह्वा च -
तवोपकाराय, जगत्!

९६.‘‘पूर्वं भूमण्डले सौभाग्यमासीदित्यशृणवाम
अधुना सर्वत्रापि दौर्भाग्यमित्थंप्रकारकं यत्-
अवटेषु स्खलन्ति जनाः, भषका भषन्ति, सविषमन्नमद्यते,
शवानां पूतिगन्धस्ताडयति नासां, कण्टकिद्रुमास्तुदन्ति देहम्’’ इति
पञ्चेन्द्रियशक्तिशून्या आरभटीमारभन्ते द्राङ्क्षन्ति च-
विराजमानेष्वप्युन्नतेषु तालवृक्षेषु, कूजत्स्वपि कोकिलेषु,
आमन्त्रयत्स्वपि मधुरेषु फलेषु, विकसितेष्वपि भ्रमरनिबिडेषु सुमनःसु,
सतीष्वपि तृणशय्यासु, जगत्!

९७. कस्मिंश्चिन्नगरे एकस्मिन् पुरुषे धनं चोरयति, ‘‘तस्मिन्नगरे
न सन्त्यचोरा’’ इत्यभिदधानि वा ?

कस्मिंश्चिन्नगरे एकस्मिन् पुरुषे अल्पविद्यावति गर्विष्ठे, ''तस्मिन्नगरे
न सन्त्यगर्विष्ठा'' इत्यभिदधानि वा ?
कस्मिंश्चिन्नगरे एकस्मिन् पुरुषे परैर्ग्रन्थं रचयित्वा
तं ग्रन्थं स्वविरचितत्वेन ख्यापयति, ''तस्मिन्नगरे
न सन्त्यग्रन्थरचयितृकीर्तिचोरा'' इत्यभिदधानि वा ?, जगत्!

९८. लज्जालवः शिशवः कुत्राप्यात्मानं निगूहन्ते
जनैः साकं मिलने विकाङ्क्षन्ते च। तद्वत्-
सांप्रतिकसंस्कृतसाम्राज्यप्रजाभिर्मिलने
केचन सुबन्तशब्दाः केचन तिङन्तशब्दाः केचन प्रत्ययाश्च
लज्जया विकाङ्क्षन्ते।
तान् सधैर्यान् क्रियास्म, तैः साकं क्रीड्यास्म च, जगत्!

९९. लोके सदाऽपि सर्वं सिद्ध्यति वाचेति मा वद
कदाचित् कतिचित् साध्यानि वाचंयमत्वेन सिद्ध्यन्ति।
लोके सदाऽपि सर्वं सिद्ध्यति वाचंयमत्वेनेति मा वद
कदाचित् कतिचित् साध्यानि वाचा सिद्ध्यन्ति।
वाचंयमत्वमवलम्बस्व यदि मन्यसे मौनमावश्यकं
वाचा विजृम्भस्व यदि मन्यसे व्याहारमावश्यकं , जगत्!

१००. श्रुतनानागानोऽपि 'अहमपि गेयासम्'
इत्येकवारमप्याशाम् अकुर्वाणो जनः प्राणिति किम् ?
दृष्टानेकगृहोऽपि 'अहमपि गृहं निर्मायासम्'
इत्येकवारमप्याशाम् अकुर्वाणो जनः प्राणिति किम् ?
आस्वादितनानासंस्कृतकाव्योऽपि 'अहमपि रचयिषीय काव्यम्'
इत्येकवारमप्याशाम् अकुर्वाणो जनः प्राणिति किम् ?,जगत्!

१०१. हे पञ्जीपण्डित!
''-'ग्रामेऽस्मिन् कति कृषीवलाः सन्ति ?
कति क्षेत्राणि व्रीहिभराणि ?
कत्याम्रवृक्षाः'- इत्यादिके ज्ञाने सत्यपि,
'कथं हलस्याकर्षणं कृत्वा व्रीहिं रोपयित्वा च
तण्डुलं जनतायै दद्याम् ?'- इति,
'कथमाम्रबीजमुप्त्वा तरून् वर्धयित्वा
फलानि जनतायै वितरेयम् ?'- इति च
नाहं जानामि''
इति किमर्थं शोचसि, किमर्थं च रोदिषि ?
'' तण्डुलदाननिष्ठानाम् आम्रफलवितरणनिरतानां चापेक्षया
पञ्जीपण्डिताः प्रशस्यतराः''
इति मर्दलं वादयन्तो ग्रामेऽस्मिन् जाग्रत्येव ,जगत्!

१०२. 'अमुष्मिन् स्थाने प्राप्ते, जनतोद्धारमनेन क्रमेण करिष्यामि;
अमुष्यां पदव्यां लब्धायाम्, एतं धर्ममेवमनुष्ठास्यामि;
अमुष्मिंश्च वस्तुनि  मत्करस्थे,
मदीयं शोकाश्रु परमानन्दबाष्पत्वेन परिवर्तयिष्यामि'
इत्यादीन् स्वप्नपटान् अवयम्।
पूर्वे स्वप्नपटा जागर्यायां धृताः।
उत्तरान् स्वप्नपटान् केऽपि कण्टका अच्छिन्दन् ,जगत्!

१०३. पिशाचो मामाक्रमतीत्यबिभयं
देवोऽदर्शयत् प्रसन्नं वदनारविन्दम्।
कनकवृष्टिर्वर्षतीत्यकरवमाशां

दरिद्रलक्ष्मीर्दण्डेन मां शिरस्यताडयत्।
स्फूर्जथोराघातमनुपालयन् अवेपे
वृक्षात् पुष्पाणि ममोत्तमाङ्गेऽपतन्।
मित्रैरुद्याने विहारमचिकीर्षं
शत्रवः सादिनः सन्त उल्लासितखड्गा अदृश्यन्त।
दुःखमपि  प्रतीक्षितेन क्रमेण न संजातं
सुखमपि प्रतीक्षितेन क्रमेण न  संजातम् ,जगत्!

१०४. शिशुमिव त्वां भावयित्वा त्वया सुविज्ञातायां चित्रकलायां
यो जन उपदिदिक्षति तव स्कन्धमारुह्य-
''कूर्चिकामङ्गुलीभिर्दृढं गृहीत्वा वर्णं वर्णय,
स्थूलानां रेखाणां स्थले सूक्ष्मा रेखाः,
सूक्ष्माणां रेखाणां च स्थले स्थूला रेखा मा कर्ष'' इत्यादीत्यादि,
तं दूरादेव करतलयुगलयोगेन नत्वा तत्र पलायस्व यत्र
तस्य च्छायाऽपि न पतति ,जगत्!

१०५. यदि त्वं कर्तव्यं कर्माचरसि सश्रद्धं,
यदि त्वं देशद्रोहं स्वप्नेऽपि न चिन्तयसि,
राष्ट्रे वर्तमानान् संविधानोक्तान् विधींश्चनुतिष्ठसि, तावताऽलम्।
त्वं देवालयं गच्छ वा मा वा गच्छ,
द्विपास्यं पूजय दामोदरं वा पूजय दुर्गां वा पूजय मा वा पूजय,
त्वदभिलषितेषु वस्तुष्वारभटीं विधातुं कोऽधिकारो मे ?,जगत्!

१०६. ताञ्जानान् स्मरामि ये बाहुभ्यां मामालिङ्गन्।
ताञ्जनान् स्मरामि ये मल्लविद्यापाण्डित्येन माममर्दयन्।
ताञ्जनान् स्मरामि ये स्निग्धां दृष्टिं मय्यपातयन्।

ताञ्जनान् स्मरामि ये चक्षुर्भ्यामेव मां दग्धुं प्रायतन्त।
आगामिनि काले के जना मां केनेत्थंभूतलक्षणेन मां स्मरन्ति ?
मृदुस्पर्शेन वा, क्रूरनखरैर्वा ?
शुचिस्मितेन वा, व्यादत्तेन भीकरेण च तुण्डेन वा ?,जगत्!

१०७. यद्यपि रूपशब्दगन्धरसस्पर्शाः सखायो मे।
तथापि भूयादियमाशीर्मे-
दृश्यासं च रूपाणामनित्यत्वम्।
प्रत्यभिज्ञेयासं च शब्दानामनित्यत्वम्।
जागर्यासं च गन्धानामनित्यत्वे।
नाभिलष्यासं जिह्वाचापल्यम्।
न लीनो भूयासमापाततो हिते स्पर्शे ।
क्रीड्यासम् अनन्तत्वान्वेषणाभिधया क्रीडया,जगत्!

१०८. वायात् सुखस्पर्शो मारुतो यः सुगन्धिः।
तुष्याद् विकसितं पुष्पं , यज्जानाति प्रमोदं भ्रमरस्य।
अनावश्यके बद्धभ्रुकुटित्वे न भूयासं बद्धभ्रुकुटिः।
अनपेक्षिते द्राङ्क्षणे न द्राङ्क्ष्यासम्।
एधिषीय हृदये, येन स्वान् दोषान् द्रक्ष्यामि।
देयासं जगते विमलान् विचारान्,
ये मद्रचितेभ्यो ग्रन्थेभ्यो निःसरन्ति ,जगत्!

**बहुशो विफला मृदुला व्याहारा इति विभावयन् परुषैः।**
**वचनैरिमां जगद्वचनवाहिनीं व्यरचयज्जगन्नाथः॥**

